# Document Information

Text title : saptashatI siddha sampuTamantra
File name : saptashatIsiddhasampuTamantra.itx
Category : mantra
Location : doc_devii
Author : Traditional
Language : Sanskrit
Subject : philosophy/hinduism/religion
Transliterated by : animesh1978 at gmail.com
Proofread by : animesh1978 at gmail.com
Description-comments : Gita press gorakhpur publication shrIdurgAsaptashatii
Latest update : September 16, 2005
Send corrections to : Sanskrit@cheerful.com
Site access : http://sanskritdocuments.org

# ॥ सप्तशती सिद्ध सम्पुटमन्त्र ॥

## श्रीदुर्गा-सप्तशती के कुछ सिद्ध सम्पुट मन्त्र

१) सामूहिक कल्याण के लिये

देव्या यया ततमिदं जगदात्मशक्त्या
निश्शेषदेवगणशक्तिसमूहमूर्त्या ।
तामम्बिकामखिलदेवमहर्षिपूज्यां
भक्त्या नताः स्म विदधातु शुभानि सा नः ॥

२) विश्व के अशुभ तथा भय का नाश करने के लिये

यस्याः प्रभावमतुलं भगवाननन्तो
ब्रह्म हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ॥

३) विश्व की रक्षा के लिये

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम् ॥

४) विश्व के अभ्युदय के लिये

विश्वेश्वरि त्वं परिपासि विश्वं
विश्वात्मिका धारयसीति विश्वम् ।
विश्वेशवन्द्या भवती भवन्ति
विश्वाश्रया ये त्वयि भक्तिनम्राः ॥

५) विश्वव्यापी विपत्तियों के नाश के लिये

देवि प्रपन्नार्तिहरे प्रसीद
प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं
त्वमीश्वरी देवि चराचरस्य ॥

६) विश्व के पाप-ताप-निवारण के लिये

देवि प्रसीद परिपालय नोऽरिभीते-
र्नित्यं यथासुरवधादधुनैव सद्यः ।
पापानि सर्वजगतां प्रशमं नयाशु
उत्पातपाकजनितांश्च महोपसर्गान् ॥

७) विपत्तिनाश के लिये
शरणागतदीनार्तपरित्राणपरायणे ।
सर्वास्यार्तिहरे देवि नारायणि नमोऽस्तु ते ॥

८) विपत्तिनाश और् शुभ की प्राप्ति के लिये
करोतु सा नः शुभहेतुरीश्वरी
शुभानि भद्राण्यभिहन्तु चापदः ।

९) भयनाश के लिये
क) सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

ख) एतत्ते वदनं सौम्यं लोचनत्रयभूषितं ।
पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ॥

ग) ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ॥

१०) पापनाश के लिये
हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव ॥

११) रोगनाश के लिये
रोगानशेषानपहंसि तुष्टा
रुष्टा तु कामान् सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां
त्वामाश्रिता ह्याश्रयतां प्रयान्ति ॥

१२) महामारीनाश के लिये
जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ॥

१३) आरोग्य और सौभाग्य प्राप्ति के लिये
देहि सौभाग्यमारोग्यं देहि मे परमं सुखम् ।
रुपं देहि यशो जयं देहि यशो देहि द्विषो जहि ॥

१४) सुलक्षणा पत्नी की प्राप्ति के लिये
पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥

१५) बाधाशान्ति के लिये
सर्वाबाधाप्रशमनं त्रैलोक्याखिलेश्वरि ।

एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥

१६) सर्वविध अभ्युदय के लिये
ते सम्मता जनपदेषु धनानि तेषां
तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥

१७) दारिद्र्यदुःखादिनाश के लिये
दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ॥

१८) रक्षा पाने के लिये
शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ॥

१९) समस्त विद्याओं की और् समस्त स्त्रियों में
मातृभाव की प्राप्ति के लिये

विद्या समस्तास्तव देवि भेदाः
स्त्रियः समस्ताः सकला जगत्सु ।
त्वैकया पूरितमम्बयैतत् ।
का ते स्तुतिः स्तव्यपरा परोक्तिः ॥

२०) सब प्रकार के कल्याण के लिये
सर्वमङ्गलमङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

२१) शक्तिप्राप्ति के लिये
सृष्टिस्थितिविनाशानां शक्तिभूते सनातनि ।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥

२२) प्रसन्नताप्राप्ति के लिये
प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि ।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥

२३) विविध उपद्रवों से बचने के लिये
रक्षांसि यत्रोग्रविषाश्च नागा
यत्रारयो दस्युबलानि यत्र ।

दावानलो यत्र तथाब्धिमध्ये
तत्र स्थिता त्वं परिपासि विश्वम् ॥

२४) बाधामुक्त होकर धन और् पुत्रादि की प्राप्ति के लिये
सर्वबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ॥

२५) भुक्तिमुक्ति की प्राप्ति के लिये
विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रुपं देहि जयं देहि यशो देहि द्विषो जहि ॥

२६) पापनाश तथा भक्तिप्राप्ति के लिये
नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥

२७) स्वर्ग और मोक्ष के लिये
सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी ।
त्वं स्तुता स्तुतये का वा भवन्तु परमोत्तयः ॥

२८) स्वर्ग और मुक्ति के लिये
सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते ।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ॥

२९) मोक्ष की प्राप्ति के लिये
त्वं वैष्णवी शक्तिरनन्तवीर्या
विश्वस्य बीजं परमासि माया ।
सम्मोहितं देवि समस्तमेतत्
त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ॥

३०) स्वप्न मे सिद्धि-असिद्धि जानने के लिये
दुर्गे देवि नमस्तुभ्यं सर्वकामार्थसाधिके ।
मम सिद्धिमसिद्धिं वा स्वप्ने सर्वं प्रदर्शय ॥

Encoded and proofread by animesh1978 at gmail.com

